चत्वारिंशदधिकचतुर्दशशतश्वासरूपा भवन्ति । तास्तथा विभावयेदित्यर्थः । एतत्पक्षद्वयभावना आवरणपूजातः कार्येति केचित् । बाह्यपूजायां तत्रैव स्थानक्लृप्तेः सर्वविलापोत्तरं भावनान्तरानवकाशादिति तदाशयः । वस्तुतस्तु स्वात्ममात्रपरत्वेन मनसस्तम्भे सति श्वासस्तम्भस्यावश्यंभावाद्देवताया रश्मिविलापनस्य विसर्जनकाल एवोचितत्वान्मनःपवनोभयस्तम्भस्यैवोत्तरत्र कालविधानायेहैवावसरसद्भावान्निरर्थकवाक्यापकर्षस्यायुक्तत्वाच्चेहैव नित्याभावना युक्तेति द्रष्टव्यम् ॥

एवमान्तरबाह्यनिखिलप्रपञ्चविलापनपूर्वकस्वात्ममात्रावशेषभावनायाः अहर्निशं धारावाहिकतावश्यकतां ध्वनयन् तदशक्तेषूत्तममध्यमाधमसाधकभेदेन त्रिविधं कालनियममाह—

**एवं मुहूर्तत्रितयं मुहूर्तद्वितयं मुहूर्तमात्रं वा भावनापरो जीवन्मुक्तो भवति स एव शिव–योगीति गद्यते ॥ ३४ ॥**

एवमित्यनेन अव्यवहितपूर्वोक्ता स्वात्ममात्रविषयिणी श्वासस्तम्भसहिता निर्विकल्पकवृत्तिरुच्यते । तदभिन्नभावनायां परः तत्रैवासक्तः भावनेतरव्यापारशून्यः धारावाहिकभावनावानिति यावत् । स जीवन्मुक्तिरूपफलभाक् अचिरादेव जायते । जैगीषव्यादयश्शिवयोगित्वेन ये व्यवह्रियन्ते तेऽप्येतादृशभावनाशालित्वादेवेति तत्पदप्रवृत्तिनिमित्तमीदृशभावनेत्यर्थः ।

**कादिमतेनान्तश्चक्रभावनाः प्रतिपादिताः ॥ ३५ ॥**

**य एवं वेद सोऽथर्वशिरोऽधीते ॥ ३६ ॥**

वेदत्रयं बहिरङ्गकर्मप्रतिपादकम् । अथर्वणवेदस्तु अन्तरङ्गकर्माण्येव प्रचुरं प्रतिपादयति । तस्यापि शिरोरूपेयमुपनिषत्तु ततोऽप्यन्तरङ्गतमां भावनां वक्ति ॥

अस्यां या अन्तश्चक्रभावनाः कथितास्ताः कादिनामकशक्तिमतरीत्यैव, न तु कौलमतेन। अस्या उपनिषद ईदृशभावनाप्रतिपादकत्वमिति पदशो वाक्यशश्च यो वेद स एवाथर्वशिरोध्ययनवान्; न तु शब्दमात्राध्ययनवान्। अध्ययनकरणकभावनाया अर्थबोधभाव्यकत्वादिति भावः। 'योऽर्थज्ञ इत्सकलं भद्रमश्नुते' इति श्रुत्यन्तरे सकलपदस्वारस्यात्तु शब्दमात्रपाठादपि किञ्चिद्भद्रमस्त्येवेति लभ्यत इति शिवम्॥

इति भावनोपनिषदोऽथर्वणशिरसोऽतनोद्भाष्यम्।
भास्कररायो विदुषां तुष्ट्यै जीवन्मुमुक्षूणाम्॥

---

# देवीस्तोत्रपञ्चकम्

## (१) लघुस्तुतिः

ऐन्द्रस्येव शरासनस्य दधती मध्येललाटं प्रभां
शौक्लीं कान्तिमनुष्णगोरिव शिरस्यातन्वती सर्वतः ।
एषासौ त्रिपुरा हृदि द्युतिरिवोष्णांशोस्सदाहस्स्थिता
छिन्द्यान्नस्सहसा पदैस्त्रिभिरघं ज्योतिर्मयी वाङ्मयी ॥ १

या मात्रा त्रपुसीलतातनुलसत्तन्तुस्थितिस्पर्धिनी
वाग्बीजे प्रथमे स्थिता तव सदा तां मन्महे ते वयम् ।
शक्तिः कुण्डलिनीति विश्वजननव्यापारबद्धोद्यमाः
ज्ञात्वेत्थं न पुनस्स्पृशन्ति जननीगर्भेऽर्भकत्वं नराः ॥ २

दृष्ट्वा सम्भ्रमकारि वस्तु सहसा ऐऐ इति व्याहृतं
येनाकूतवशादपीह वरदे बिन्दुं विनाप्यक्षरम् ।
तस्यापि ध्रुवमेव देवि तरसा जाते तवानुग्रहे
वाचस्सूक्तिसुधारसद्रवमुचो निर्यान्ति वक्त्राम्बुजात् ॥ ३

यन्नित्ये तव कामराजमपरं मन्त्राक्षरं निष्कलं
तत्सारस्वतमित्यवैति विरलः कश्चिद्बुधश्चेद्भुवि ।
आख्यानं प्रतिपर्व सत्यतपसो यत्कीर्तयन्तो द्विजाः
प्रारम्भे प्रणवास्पदप्रणयितां नीत्वोच्चरन्ति स्फुटम् ॥ ४

यत्सद्यो वचसां प्रवृत्तिकरणे दृष्टप्रभावं बुधैः
तार्तीयं तदहं नमामि मनसा त्वद्बीजमिन्दुप्रभम् ।
अस्त्यौर्वोऽपि सरस्वतीमनुगतो जाड्याम्बुविच्छित्तये
गोशब्दो गिरि वर्तते सुनियतं योगं विना सिद्धिदः ॥ ५

एकैकं तव देवि बीजमनघं सव्यञ्जनाव्यञ्जनं
कूटस्थं यदि वा पृथक्क्रमगतं यद्वा स्थितं व्युत्क्रमात् ।
यं यं काममपेक्ष्य येन विधिना केनापि वा चिन्तितं
जप्तं वा सफलीकरोति सततं तं तं समस्तं नृणाम् ॥ ६
वामे पुस्तकधारिणीमभयदां साक्षस्रजं दक्षिणे
भक्तेभ्यो वरदानपेशलकरां कर्पूरकुन्दोज्ज्वलाम् ।
उज्जृम्भाम्बुजपत्रकान्तनयनस्निग्धप्रभालोकिनीं
ये त्वामम्ब न शीलयन्ति मनसा तेषां कवित्वं कुतः ॥ ७
ये त्वां पाण्डुरपुण्डरीकपटलस्पष्टाभिरामप्रभां
सिञ्चन्तीममृतद्रवैरिव शिरो ध्यायन्ति मूर्ध्नि स्थिताम् ।
अश्रान्ता विकटस्फुटाक्षरपदा निर्याति वक्त्राम्बुजात्
तेषां भारति भारती सुरसरित्कल्लोललोलोर्मिवत् ॥ ८
ये सिन्दूरपरागपिञ्जपिहितां त्वत्तेजसाऽऽद्यामिमां
उर्वीं चापि विलीनयावकरसप्रस्तारमग्नामिव ।
पश्यन्ति क्षणमप्यनन्यमनसस्तेषामनङ्गज्वर-
क्लान्तस्रस्तकुरङ्गशावकदृशो वश्या भवन्ति स्फुटम् ॥ ९
चञ्चत्काञ्चनकुण्डलाङ्गदधरामाबद्धकाञ्चीस्रजं
ये त्वां चेतसि तद्गते क्षणमपि ध्यायन्ति कृत्वा स्थिराम् ।
तेषां वेश्मसु विभ्रमादहरहः स्फारीभवन्त्यश्चिरं
माद्यत्कुञ्जरकर्णतालतरलाः स्थैर्यं भजन्ते श्रियः ॥ १०
आर्भट्या शशिखण्डमण्डितजटाजूटां नृमुण्डस्रजं
बन्धूकप्रसवारुणाम्बरधरां प्रेतासनाध्यासिनीम् ।
त्वां ध्यायन्ति चतुर्भुजां त्रिनयनामापीनतुङ्गस्तनीं
मध्ये निम्नवलित्रयाङ्किततनुं त्वद्रूपसंवित्तये ॥ ११

जातोऽप्यल्पपरिच्छदे क्षितिभुजां सामान्यमात्रे कुले
निःशेषावनिचक्रवर्तिपदवीं लब्ध्वा प्रतापोन्नतः ।
यद्विद्याधरवृन्दवन्दितपदःश्रीवत्सराजोऽभवत्
देवि त्वच्चरणाम्बुजप्रणतिजः सोऽयं प्रसादोदयः ॥ १२
चण्डि त्वच्चरणाम्बुजार्चनकृते बिल्वादिलोल्लुण्ठन-
त्रुट्यत्कण्टककोटिभिः परिचयं येषां न जग्मुः कराः ।
ते दण्डाङ्कुशचक्रचापकुलिशश्रीवत्समत्स्याङ्कितैः
जायन्ते पृथिवीभुजः कथमिवाम्भोजप्रभैः पाणिभिः ॥ १३
विप्राः क्षोणिभुजो विशस्तदितरे क्षीराज्यमध्वासवैः
त्वां देवि त्रिपुरे परापरमयीं सन्तर्प्य पूजाविधौ ।
यां यां प्रार्थयते मनःस्थिरधियां तेषां त एव ध्रुवं
तां तां सिद्धिमवाप्नुवन्ति तरसा विघ्नैरविघ्नीकृताः ॥ १४
शब्दानां जननी त्वमत्र भुवने वाग्वादिनीत्युच्यसे
त्वत्तः केशववासवप्रभृतयोऽप्याविर्भवन्ति स्फुटम् ।
लीयन्ते खलु यत्र कल्पविरमे ब्रह्मादयस्तेऽप्यमी
सा त्वं काचिदचिन्त्यरूपमहिमा शक्तिः परा गीयसे ॥ १५
देवानां त्रितयं त्रयी हुतभुजां शक्तित्रयं त्रिः स्वराः
त्रैलोक्यं त्रिपदी त्रिपुष्करमथो त्रिब्रह्म वर्णास्त्रयः ।
यत्किञ्चिज्जगति त्रिधा नियमितं वस्तु त्रिवर्गादिकं
तत्सर्वं त्रिपुरेति नाम भगवत्यन्वेति ते तत्त्वतः ॥ १६
लक्ष्मीं राजकुले जयां रणभुवि क्षेमङ्करीमध्वनि
क्रव्यादद्विपसर्पभाजि शबरीं कान्तारदुर्गे गिरौ ।
भूतप्रेतपिशाचजम्बुकभये स्मृत्वा महाभैरवीं
व्यामोहे त्रिपुरां तरन्ति विपदस्तारां च तोयप्लवे ॥ १७

माया कुण्डलिनी क्रिया मधुमती काली कलामालिनी
मातङ्गी विजया जया भगवती देवी शिवा शाम्भवी ।
शक्तिश्शङ्करवल्लभा त्रिनयना वाग्वादिनी भैरवी
ह्रींकारी त्रिपुरा परापरमयी माता कुमारीत्यसि ।। १८
आईपल्लवितैः परस्परयुतैर्द्वित्रिक्रमाद्यक्षरै
काद्यैः क्षान्तगतैस्स्वरादिभिरथ क्षान्तैश्च तैस्सस्वरैः ।
नामानि त्रिपुरे भवन्ति खलु यान्यत्यन्तगुह्यानि ते
तेभ्यो भैरवपत्नि विंशतिसहस्रेभ्यः परेभ्यो नमः ।। १९
बोद्धव्या निपुणं बुधैस्स्तुतिरियं कृत्वा मनस्तद्गतं
भारत्यास्त्रिपुरेत्यनन्यमनसा यत्राद्यवृत्ते स्फुटम् ।
एकद्वित्रिपदक्रमेण कथितस्तत्पादसङ्ख्याक्षरैः
मन्त्रोद्धारविधिर्विशेषसहितस्सत्सम्प्रदायान्वितः ।। १०
सावद्यं निरवद्यमस्तु यदि वा किं वानया चिन्तया
नूनं स्तोत्रमिदं पठिष्यति जनो यस्यास्ति भक्तिस्त्वयि ।
सञ्चिन्त्यापि लघुत्वमात्मनि दृढं सञ्जायमानं हठात्
त्वद्भक्त्या मुखरीकृतेन रचितं यस्मान्मयापि ध्रुवम् ।। २१

इति लघुस्तवः



# (२) चर्चास्तवः

सौन्दर्यविभ्रमभुवो भुवनाधिपत्य-
सङ्कल्पकल्पतरवस्त्रिपुरे जयन्ति ।
एते कवित्वकुमुदप्रकरावबोध-
पूर्णेन्दवस्त्वयि जगज्जननि प्रणामाः ।। १

कल्पद्रुमप्रसवकल्पितचित्रपूजां
उद्दीपितप्रियतमामदरक्तगीतिम् ।
नित्यं भवानि भवतीमुपवीणयन्ति
विद्याधराः कनकशैलगुहागृहेषु ॥ ८

लक्ष्मीवशीकरणकर्मणि कामिनीनां
आकर्षणव्यतिकरेषु च सिद्धमन्त्रः ।
नीरन्ध्रमोहतिमिरच्छिदुरप्रदीपो
देवि त्वदङ्घ्रिजनितो जयति प्रसादः ॥ ९

देवि त्वदङ्घ्रिनखरत्नभुवो मयूखाः
प्रत्यग्रमौक्तिकरुचो मुदमुद्वहन्ति ।
सेवानतिव्यतिकरे सुरसुन्दरीणां
सीमन्तसीम्नि कुसुमस्तबकायितं यैः ॥ १०

मूर्ध्निस्फुरत्तुहिनदीधितिदीप्तिदीप्तं
मध्येललाटममरायुधरश्मिचित्रम् ।
हृच्चक्रचुम्बि हुतभुक्कणिकानुकारि
ज्योतिर्यदेतदिदमम्ब तव स्वरूपम् ॥ ११

रूपं तव स्फुरितचन्द्रमरीचिगौरं
आलोकते शिरसि वागधिदैवतं यः ।
निस्सीमसूक्तिरचनामृतनिर्झरस्य
तस्य प्रसादमधुराः प्रसरन्ति वाचः ॥ १२

सिन्दूरपांसुपटलच्छुरितामिव द्यां
त्वत्तेजसा जतुरसस्नपितामिवोर्वीम् ।
यः पश्यति क्षणमपि त्रिपुरे विहाय
व्रीडां मृडानि सुदृशस्तमनुद्रवन्ति ॥ १३

मातर्मुहूर्तमपि यः स्मरति स्वरूपं
लाक्षारसप्रसरतन्तुनिभं भवत्याः ।
ध्यायन्त्यनन्यमनसस्तमनङ्गतप्ताः
प्रद्युम्नसीम्नि सुभगत्वगुणं तरुण्यः ॥ १४
योऽयं चकास्ति गगनार्णवरत्नमिन्दुः
योऽयं सुरासुरगुरुः पुरुषः पुराणः ।
यद्वामम‍र्धमिदमन्धकसूदनस्य
देवि त्वमेव तदिति प्रतिपादयन्ति ॥ १५
इच्छानुरूपमनुरूपगुणप्रकर्ष-
सङ्कर्षिणि त्वमभिमृश्य यदा बिभर्षि ।
जायेत स त्रिभवनैकगुरुस्तदानीं
देवश्शिवोऽपि भुवनत्रयसूत्रधारः ॥ १६
ध्यातासि हैमवति येन हिमांशुरश्मि-
मालामलद्युतिरकल्मषमानसेन ।
तस्याविलम्बमनवद्यमनन्तकल्पं
अल्पैर्दिनैस्सृजसि सुन्दरि वाग्विलासम् ॥ १७
आधारमारुतनिरोधवशेन येषां
सिन्दूररञ्जितसरोजगुणानुकारि ।
दीप्तं हृदि स्फुरति देवि वपुस्त्वदीयं
ध्यायन्ति तानिह समीहितसिद्धिसार्थाः ॥ १८
ये चिन्तयन्त्यरुणमण्डलमध्यवर्ति
रूपं तवाम्ब नवयावकपङ्कपिङ्गम् ।
तेषां सदैव कुसुमायुधबाणभिन्न-
वक्षःस्थला मृगदृशो वशगा भवन्ति ॥ १९

त्वामैन्दवीमिव कलामनुफालदेशं
उद्भासिताम्बरतलामवलोकयन्तः ।
सद्यो भवानि सुधियः कवयो भवन्ति
त्वं भावनाहितधियां कुलकामधेनुः ॥ २०
शर्वाणि सर्वजनवन्दितपादपद्मे
पद्मच्छदद्युतिविडम्बितनेत्रलक्ष्मि ।
निष्पापमूर्तिजनमानसराजहंसि
हंसि त्वमापदमनेकविधां जनस्य ॥ २१
उत्तप्तहेमरुचिरे त्रिपुरे पुनीहि
चेतश्चिरन्तनमघौघवनं लुनीहि ।
कारागृहे निगलबन्धनयन्त्रितस्य
त्वत्संस्मृतौ झडिति मे निगलास्त्रुटन्ति ॥ २२
त्वां व्यापिनीति सुमना इति कुण्डलीति
त्वां कामिनीति कमलेति कलावतीति ।
त्वां मालिनीति ललितेत्यपराजितेति
देवि स्तुवन्ति विजयेति जयेत्युमेति ॥ २३
उद्दामकामपरमार्थसरोजखण्ड-
चण्डद्युतिद्युतिमपासितषड्विकाराम् ।
मोहद्विपेन्द्रकदनोद्यतबोधसिंह-
लीलागुहां भगवतीं त्रिपुरां नमामि ॥ २४
गणेशवटुकस्तुता रतिसहायकामान्विता
स्मरारिवरविष्टरा कुसुमबाणबाणैर्युता ।
अनङ्गकुसुमादिभिः परिवृता च सिद्धैस्त्रिभिः
कदम्बवनमध्यगा त्रिपुरसुन्दरी पातु नः ॥ २५

रुद्राणि विद्रुममयीं प्रतिमामिव त्वां
ये चिन्तयन्त्यरुणकान्तिमनन्यरूपाम् ।
तानेत्य पक्ष्मलदृशः प्रसभं भजन्ते
कण्ठावसक्तमृदुबाहुलतास्तरुण्यः ॥ २६

त्वद्रूपैकनिरूपणप्रणयिताबन्धो दृशोस्त्वद्गुण-
ग्रामाकर्णनरागिता श्रवणयोस्त्वत्संस्मृतिश्चेतसि ।
त्वत्पादार्चनचातुरी करयुगे त्वत्कीर्तितं वाचि मे
कुत्रापि त्वदुपासनव्यसनिता मे देवि मा शाम्यतु ॥ २७

त्वद्रूपमुल्लसितदाडिमपुष्परक्तं
उद्भावयेन्मदनदैवतमक्षरं यः ।
तं रूपहीनपि मन्मथनिर्विशेषं
आलोकयन्त्युरुनितम्बतटास्तरुण्यः ॥ २८

ब्रह्मेन्द्ररुद्रहरिचन्द्रसहस्ररश्मि-
स्कन्दद्विपाननहुताशनवन्दितायै ।
वागीश्वरि त्रिभुवनेश्वरि विश्वमातः
अन्तर्बहिश्च कृतसंस्थितये नमस्ते ॥ २९

कस्तोत्रमेतदनुवासरमीश्वरायाः
श्रेयस्करं पठति वा यदि वा शृणोति ।
तस्येप्सितं फलति राजभिरीड्यतेऽसौ
जायेत स प्रियतमो मदिरेक्षणानाम् ॥ ३०

इति चर्चास्तवः



# (३) घटस्तवः

आनन्दमन्थरपुरन्दरमुक्तमाल्यं
मौलौ हठेन निहितं महिषासुरस्य ।
पादाम्बुजं भवतु मे विजयाय मञ्जु-
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥ १
देवि त्र्यम्बकपत्नि पार्वति सति त्रैलोक्यमातश्शिवे
शर्वाणि त्रिपुरे मृडानि वरदे रुद्राणि कात्यायनि ।
भीमे भैरवि चण्डि शर्वरिकले कालक्षये शूलिनि
त्वत्पादप्रणताननन्यमनसः पर्याकुलान्पाहि नः ॥ २
देवि त्वां सकृदेव यः प्रणमति क्षोणीभृतस्तं नम-
न्त्याजन्मस्फुरदङ्घ्रिपीठविलुठत्कोटीरकोटिच्छटाः ।
यस्त्वामर्चति सोऽर्च्यते सुरगणैर्यस्तौति स स्तूयते
यस्त्वां ध्यायति तं स्मरार्तिविधुरा ध्यायन्ति वामभ्रुवः ॥ ३
उन्मत्ता इव सग्रहा इव विषव्यासक्तमूर्छा इव
प्राप्तप्रौढमदा इवार्तिविरहग्रस्ता इवार्ता इव ।
ये ध्यायन्ति हि शैलराजतनयां धन्यास्त एवाग्रतः
त्यक्तोपाधिविवृद्धरागमनसो ध्यायन्ति तान्सुभ्रुवः ॥ ४
ध्यायन्ति ये क्षणमपि त्रिपुरे हृदि त्वां
लावण्ययौवनधनैरपि विप्रयुक्ताः ।
ते विस्फुरन्ति ललितायतलोचनानां
चित्तैकभित्तिलिखितप्रतिमाः पुमांसः ॥ ५
एतं किं नु दृशा पिबाम्युत विशाम्यस्याङ्गमङ्गैर्निजैः
किं वाऽमुं निगराम्यनेन सहसा किं वैकतामाश्रये ।
यस्येत्थं विवशो विकल्पललिताकूतेन योषिज्जनः
किं तद्यन्न करोति देवि हृदये यस्य त्वमावर्तसे ॥ ६

विश्वव्यापिनि यद्वदीश्वर इति स्थाणावनन्याश्रयः
शब्दश्शक्तिरिति त्रिलोकजननि त्वय्येव तथ्यस्थितिः ।
इत्थं सत्यपि शक्नुवन्ति यदिमाः क्षुद्रा रुजो बाधितुं
त्वद्भक्तानपि न क्षिणोषि च रुषा तद्देवि चित्रं महत् ॥ ७
इन्दोर्मध्यगतां मृगाङ्कसदृशच्छायां मनोहारिणीं
पाण्डूत्फुल्लसरोरुहासनगतां स्निग्धप्रदीपच्छविम् ।
वर्षन्तीममृतं भवानि भवतीं ध्यायन्ति ये देहिनः
ते निर्मुक्तरुजो भवन्ति रिपवः प्रोज्झन्ति तान्दूरतः ॥ ८
पूर्णेन्दोश्शकलैरिवातिबहलैः पीयूषपूरैरिव
क्षीराब्धेर्लहरीभरैरिव सुधापङ्कस्य पिण्डैरिव ।
प्रालेयैरिव निर्मितं तव वपुर्ध्यायन्ति ये श्रद्धया
चित्तान्तर्निहितार्तितापविपदस्ते सम्पदं बिभ्रति ॥ ९
ये संस्मरन्ति तरलां सहसोल्लसन्तीं
त्वां ग्रन्थिपञ्चकभिदं तरुणार्कशोणाम् ।
रागार्णवे बहलरागिणि मज्जयन्तीं
कृत्स्नं जगद्दधति चेतसि तान्मृगाक्ष्यः ॥ १०
लाक्षारसस्नपितपङ्कजतन्तुतन्वीं
अन्तस्स्मरत्यनुदिनं भवतीं भवानि ।
यस्तं स्मरप्रतिममप्रतिमस्वरूपाः
नेत्रोत्पलैर्मृगदृशो भृशमर्चयन्ति ॥ ११
स्तुमस्त्वां वाचमव्यक्तां हिमकुन्देन्दुरोचिषम् ।
कदम्बमालां बिभ्राणामापादतललम्बिनीम् ॥ १२
मूर्ध्नीन्दोस्सितपङ्कजासनगतां प्रालेयपाण्डुत्विषं
वर्षन्तीममृतं सरोरुहभुवो वक्त्रेऽपि रन्ध्रेऽपि च ।

अच्छिन्ना च मनोहरा च ललिता चातिप्रसन्नापि च
त्वामेवं स्मरतस्स्मरारिदयिते वाक्सर्वतो वल्गति ॥ १३
ददातीष्टान्भोगान्क्षपयति रिपून्हन्ति विपदो
दहत्याधीन्व्याधीन् शमयति सुखानि प्रतनुते ।
हठादन्तर्दुःखं दलयति पिनष्टीष्टविरहं
सकृद्ध्याता देवी किमिव निरवद्यं न कुरुते ॥ १४
यस्त्वां ध्यायति वेत्ति विन्दति जपत्यालोकते चिन्तय–
त्यन्वेति प्रतिपद्यते कलयति स्तौत्याश्रयत्यर्चति ।
यश्च त्र्यम्बकवल्लभे तव गुणानाकर्णयत्यादरात्
तस्य श्रीर्न गृहदपैति विजयस्तस्याग्रतो धावति ॥ १५
किं किं दुःखं दनुजदलिनि क्षीयते न स्मृतायां
का का कीर्तिः कुलकमलिनि ख्याप्यते न स्तुतायाम् ।
का का सिद्धिस्सुरवरनुते प्राप्यते नार्चितायां
कं कं योगं त्वयि न चिनुते चित्तमालम्बितायाम् ॥ १६
ये देवि दुर्धरकृतान्तमुखान्तरस्थाः
ये कालि कालघनपाशनितान्तबद्धाः ।
ये चण्डि चण्डगुरुकल्मषसिन्धुमग्नाः
तान्पासि मोचयसि तारयसि स्मृतैव ॥ १७
लक्ष्मीवशीकरणचूर्णसहोदराणि
त्वत्पादपङ्कजरजांसि चिरं जयन्ति ।
यानि प्रणाममिलितानि नृणां ललाटे
लुम्पन्ति दैवलिखितानि दुरक्षराणि ॥ १८
रे मूढाः किमयं वृथैव तपसा कायः परिक्लिश्यते
यज्ञैर्वा बहुदक्षिणैः किमितरे रिक्तीक्रियन्ते गृहाः ।

भक्तिश्चेदविनाशिनी भगवतीपादद्वयी सेव्यतां
उन्निद्राम्बुरुहातपत्रसुभगा लक्ष्मीः पुरो धावति ॥ १९
याचे न कञ्चन न कञ्चन वञ्चयामि
सेवे न कञ्चन निरस्तसमस्तदैन्यः ।
श्लक्ष्णं वसे मधुरमद्मि भजे वरस्त्रीः
देवी हृदि स्फुरति मे कुलकामधेनुः ॥ २०
नमामि यामिनीनाथलेखालङ्कृतकुन्तलाम् ।
भवानीं भवसन्तापनिर्वापणसुधानदीम् ॥ २१

इति वटस्तवः



# (४) अम्बास्तवः

यामामनन्ति मुनयः प्रकृतिं पुराणीं
विद्येति यां श्रुतिरहस्यविदो वदन्ति ।
तामर्धपल्लवितशङ्कररूपमुद्रां
देवीमनन्यशरणश्शरणं प्रपद्ये ॥ १
अम्ब स्तवेषु तव तावदकर्तृकाणि
कुण्ठीभवन्ति वचसामपि गुम्भनानि ।
डिम्भस्य मे स्तुतिरसावसमञ्जसापि
वात्सल्यनिघ्नहृदयां भवतीं धिनोतु ॥ ३
व्योमेति बिन्दुरिति नाद इतीन्दुलेखा-
रूपेति वाग्भवतनूरिति मातृकेति ।
निस्स्यन्दमानसुखबोधसुधास्वरूपा
विद्योतसे मनसि भाग्यवतां जनानाम् ॥ २

आविर्भवत्पुलकसन्ततिभिश्शरीरैः
निस्स्यन्दमानसलिलैर्नयनैश्च नित्यम् ।
वाग्भिश्च गद्गदपदाभिरुपासते ये
पादौ तवाम्ब भुवनेषु त एव धन्याः ॥ ४

वक्त्रं यदुद्यतमभिष्टुतये भवत्याः
तुभ्यं नमो यदपि देवि शिरः करोति ।
चेतश्च यत्त्वयि परायणमम्ब तानि
कस्यापि कैरपि भवन्ति तपोविशेषैः ॥ ५

मूलालवालकुहरादुदिता भवानि
निर्भिद्य षट्सरसिजानि तटिल्लतेव ।
भूयोऽपि तत्र विशसि ध्रुवमण्डलेन्दु-
निस्स्यन्दमानपरमामृततोयरूपा ॥ ६

दग्धं यदा मदनमेकमनेकधा ते
मुग्धः कटाक्षविधिरङ्कुरयाञ्चकार ।
धत्ते तदाप्रभृति देवि ललाटनेत्रं
सत्यं ह्रियैव मुकुलीकृतमिन्दुमौलेः ॥ ७

अज्ञातसम्भवमनाकलितान्ववायं
भिक्षुं कपालिनमवाससमद्वितीयम् ।
पूर्वं करग्रहणमङ्गलतो भवत्याः
शम्भुं क एव बुबुधे गिरिराजकन्ये ॥ ८

चर्माम्बरं च शवभस्मविलेपनं च
भिक्षाटनं च नटनं च परेतभूमौ ।
वेतालसंहतिपरिग्रहता च शम्भोः
शोभां बिभर्ति गिरिजे तव साहचर्यात् ॥ ९

कल्पोपसंहरणकेलिषु पण्डितानि
चण्डानि खण्डपरशोरपि ताण्डवानि ।
आलोकनेन तव कोमलितानि मातः
लास्यात्मना परिणमन्ति जगद्विभूत्यै ॥ १०

जन्तोरपश्चिमतनोस्सति कर्मसाम्ये
निश्शेषपाशपटलच्छिदुरा निमेषात् ।
कल्याणि देशिककटाक्षसमाश्रयेण
कारुण्यतो भवति शाम्भववेधदीक्षा ॥ ११

मुक्ताविभूषणवती नवविद्रुमाभा
यच्चेतसि स्फुरसि तारकितेव सन्ध्या ।
एकस्स एव भुवनत्रयसुन्दरीणां
कन्दर्पतां व्रजति पञ्चशरीं विनापि ॥ १२

ये भावयन्त्यमृतवाहिभिरंशुजालैः
आप्यायमानभुवनाममृतेश्वरीं त्वाम् ।
ते लङ्घयन्ति ननु मातरलङ्घनीयां
ब्रह्मादिभिस्सुरवरैरपि कालकक्षाम् ॥ १३

यस्स्फाटिकाक्षगुणपुस्तककुण्डिकाढ्यां
व्याख्यासमुद्यतकरां शरदिन्दुशुभ्राम् ।
पद्मासनां च हृदये भवतीमुपास्ते
मातस्स विश्वकवितार्किकचक्रवर्ती ॥ १४

बर्हावतंसयुतबर्बरकेशपाशां
गुञ्जावलीकृतघनस्तनहारशोभाम् ।
श्यामां प्रवालवदनां सुकुमारहस्तां
त्वामेव नौमि शबरीं शबरस्य जायाम् ॥ १५

अर्धेन किं नवलतालतिलतेन मुग्धे
क्रीतं विभोः परुषमर्धमिदं त्वयेति ।
आलीजनस्य परिहासवचांसि मन्ये
मन्दस्मितेन तव देवि जडीभवन्ति ॥ १६

ब्रह्माण्डबुद्बुदकदम्बकसङ्कुलोऽयं
मायोदधिर्विविधतत्त्वतरङ्गमालः ।
आश्चर्यमम्ब झडिति प्रलयं प्रयाति
त्वद्ध्यानसन्ततिमहाबडबामुखाग्नौ ॥ १७

दाक्षायणीति कुटिलेति कुहारिणीति
कात्यायनीति कमलेति कलावतीति ।
एका सती भगवती परमार्थतोऽपि
सन्दृश्यसे बहुविधा ननु नर्तकीव ॥ १८

आनन्दलक्षणमनाहतनाम्नि देशे
नादात्मना परिणतं तव रूपमीशे ।
प्रत्यङ्मुखेन मनसा परिचीयमानं
शंसन्ति नेत्रसलिलैः पुलकैश्च धन्याः ॥ १९

त्वं चन्द्रिका शशिनि तिग्मरुचौ रुचिस्त्वं
त्वं चेतनासि पुरुषे पवने बलं त्वम् ।
त्वं स्वादुतासि सलिले शिखिनि त्वमूष्मा
निस्सारमेव निखिलं त्वदृते यदि स्यात् ॥ २०

ज्योतींषि यद्दिवि चरन्ति यदन्तरिक्षं
सूते पयांसि यदहिर्धरणीं च धत्ते ।
यद्वाति वायुरनलो यदुदर्चिरास्ते
तत्सर्वमम्ब तव केवलमाज्ञयैव २१

सङ्कोचमिच्छसि यदा गिरिजे तदानीं
वाक्तर्कयोस्त्वमसि भूमिरनामरूपा ।
यद्वा विकासमुपयासि यदा तदानीं
त्वन्नामरूपगणनास्सुकरा भवन्ति ॥ २२
भोगाय देवि भवतीं कृतिनः प्रणम्य
भ्रूकिङ्करीकृतसरोजगृहास्सहस्रम् ।
चिन्तामणिप्रचयकल्पितकेलिशैले
कल्पद्रुमोपवन एव चिरं रमन्ते ॥ २३
हर्तुं त्वमेव भवसि त्वदधीनमीशे
संसारतापमखिलं दयया पशूनाम् ।
वैकर्तनी किरणसंहतिरेव शक्ता
घर्मं निजं शमयितुं निजयैव वृष्ट्या ॥ २४
शक्तिश्शरीरमधिदैवतमन्तरात्मा
ज्ञानं क्रिया करणमानसजालमिच्छा ।
ऐश्वर्यमायतनमावरणानि च त्वं
किं तन्न यद्भवसि देवि शशाङ्कमौलेः ॥ २५
भूमौ निवृत्तिरुदिता पयसि प्रतिष्ठा
विद्याऽनले मरुति शान्तिरतीवकान्तिः ।
व्योम्नीति याः किल कलाः कलयन्ति विश्वं
तासां हि दूरतरमम्ब पदं त्वदीयम् ॥ २६
यावत्पदं पदसरोजयुगं त्वदीयं
नाङ्गीकरोति हृदयेषु जगच्छरण्ये ।
तावद्विकल्पजटिलाः कुटिलप्रकाराः
तर्कग्रहास्समयिनां प्रलयं न यान्ति ॥ २७

निर्देवयानपितृयानविहारमेके
कृत्वा मनः करणमण्डलसार्वभौमम् ।
ध्याने निवेश्य तव कारणपञ्चकस्य
पर्वाणि पार्वति नयन्ति निजासनत्वम् ॥ २८
स्थूलासु मूर्तिषु महीप्रमुखासु मूर्तेः
कस्याश्चनापि तव वैभवमम्ब यस्याः ।
पत्या गिराऽपि न शक्यत एव वक्तुं
सापि स्तुता किल मयेति तितिक्षितव्यम् ॥ २९
कालाग्निकोटिरुचिमम्ब षडध्वशुद्धौ
आप्लावनेषु भवतीममृतौघवृष्टिम् ।
श्यामां घनस्तनतटां शकलीकृताघां
ध्यायन्त एव जगतां गुरवो भवन्ति ॥ ३०
विद्यां परां कतिचिदम्बरमम्ब केचित्
आनन्दमेव कतिचित्कतिचिच्च मायाम् ।
त्वां विश्वमाहुरपरे वयमामनामः
साक्षादपारकरुणां गुरुमूर्तिमेव ॥ ३१
कुवलयदलनीलं बर्बरस्निग्धकेशं
पृथुतरकुचभाराक्रान्तकान्तावलग्नम् ।
किमिह बहुभिरुक्तैस्त्वत्स्वरूपं परं नः
सकलजननि मातस्सन्ततं सन्निधत्ताम् ॥ ३२

इत्यम्बास्तवः



# (५) सकलजननीस्तोत्रम्

अजानन्तो यान्ति क्षयमवशमन्योन्यकलहैः
अमी मायाग्रन्थौ तव परिलुठन्तस्समयिनः ।

जगन्मातर्जन्मज्वरभयतमःकौमुदि वयं
नमस्ते कुर्वाणाश्शरणमुपयामो भगवतीम् ॥ १
वचस्तर्कागम्यस्वरसपरमानन्दविभव-
प्रबोधाकाराय द्युतितुलितनीलोत्पलरुचे ।
शिवाद्याराध्याय स्तनभरविनम्राय सततं
नमस्तस्मै कस्मैचन भवतु मुग्धाय महसे ॥ २
अनाद्यन्ताभेदप्रणयरसिकापि प्रणयिनी
शिवस्यासीर्यत्त्वं परिणयविधौ देवि गृहिणी ।
सवित्री भूतानामपि यदुदभूश्शैलतनया
तदेतत्संसारप्रणयनमहानाटकमुखम् ॥ ३
ब्रुवन्त्येके तत्त्वं भगवति सदन्ये विदुरसत्
परे मातः प्राहुस्तव सदसदन्ये सुकवयः ।
परे नैतत्सर्वं समभिदधते देवि सुधियः
तदेतत्त्वन्मायाविलसितमशेषं ननु शिवे ॥ ४
लुठद्गुञ्जाहारस्तनभरनमन्मध्यलतिकां
उदञ्चद्घर्माम्भःकणगुणित*वक्त्राम्बुजरुचम् ।
शिवं पार्थत्राणप्रवणमृगयाकारगुणितं
शिवामन्वग्यान्तीं शरणमहमन्वेमि शबरीम् ॥ ५
मिथःकेशाकेशिप्रथननिधनास्तर्कघटनाः
बहुश्रद्धाभक्तिप्रणतिविषयाश्शास्त्रविधयः ।
प्रसीद प्रत्यक्षीभव गिरिसुते देहि शरणं
निरालम्बं चेतः परिलुठति पारिप्लवमिदम् ॥ ६
शुनां वा वह्नेर्वा खगपरिषदो वा यदशनं
कदा केन केति क्वचिदपि न कश्चित्कलयति ।

---

*नीलोत्पलरुचिम् इति पाठान्तरम्.

अमुष्मिन् विश्वासं विजहिहि ममाह्लाय वपुषि
प्रपद्येथाश्चेतस्सकलजननीमेव शरणम् ॥ ७
तटित्कोटिज्योतिर्द्युतिदलितषड्ग्रन्थिगहनं
प्रविष्टं स्वाधारं पुनरपि सुधावृष्टिवपुषा ।
किमप्यष्टाविंशत्किरणसकलीभूतमनिशं
भजे धाम श्यामं कुचभरनतं बर्बरकचम् ॥ ८
चतुष्पत्रान्तष्षड्दलपुटभगान्तस्त्रिवलय-
स्फुरद्विद्युद्वह्निद्युमणिनियुताभद्युतिलते ।
षडश्रं भित्त्वाऽऽदौ दशदलमथ द्वादशदलं
कलाश्रं च द्व्यश्रं गतवति नमस्ते गिरिसुते ॥ ९
कुलं केचित्प्राहुर्वपुरकुलमन्ये तव बुधाः
परे तत्सम्भेदं समभिदधते कौलमपरे ।
चतुर्णामप्येषामुपरि किमपि प्राहुरपरे
महामाये तत्त्वं तव कथममी निश्चिनुमहे ॥ १०
षडध्वारण्यानीं प्रलयरविकोटिप्रतिरुचा
रुचा भस्मीकृत्य स्वपदकमलप्रह्वशिरसाम् ।
वितन्वनश्शैवं किमपि वपुरिन्दीवररुचिः
कुचाभ्यामानम्रस्तव पुरुषकारो विजयते ॥ ११
प्रकाशानन्दाभ्यामविदितचरीं मध्यपदवीं
प्रविश्यैतद्द्वन्द्वं रविशशिसमाख्यं कबलयन् ।
प्रपद्योर्ध्वं नादं लयदहनभस्मीकृतकुलः
प्रसादात्ते जन्तुश्शिवमकुलमम्ब प्रविशति ॥ १२
मनुष्यास्तिर्यञ्चो मरुत इति लोकत्रयमिदं
भवाम्भोधौ मग्नं त्रिगुणलहरीकोटिलुठितम् ।

कटाक्षश्चेद्यत्र क्वचन तव मातः करुणया
शरीरी सद्योऽयं व्रजति परमानन्दतनुताम् ॥ १३
प्रियङ्गुश्यामाङ्गीमरुणतरवासःकिसलयां
समुन्मीलन्मुक्ताफलवहलनेपथ्यसुभगाम् ।
स्तनद्वन्द्वस्फारस्तवकनमितां कल्पलतिकां
सकृद्ध्यायन्तस्त्वां दधति शिवचिन्तामणिपदम् ॥ १४
षडाधारावर्तैरपरिमितमन्त्रोर्मिपटलैः
लसन्मुद्राफेनैर्बहुविधचलद्दैवतझषैः ।
क्रमस्रोतोभिस्त्वं वहसि परनादामृतनदी
भवानि प्रत्यग्रा शिवचिदमृताब्धिप्रणयिनी ॥ १५
महीपाथोवह्निश्वसनवियदात्मेन्दुरविभिः
वपुर्भिर्ग्रस्ताशैरपि तव कियानम्ब महिमा ।
अमून्यालोक्यन्ते भगवति न कुत्राप्यणुतमां
अवस्थां प्राप्तानि त्वयि तु परमव्योमवपुषि ॥ १६
कलामाज्ञां प्रज्ञां समयमनुभूतिं समरसं
गुरुं पारम्पर्यं विनयमुपदेशं शिवपदम् ।
प्रमाणं निर्वाणं प्रकृतिमभिभूतिं परगुहां
विधिं विद्यामाहुस्सकलजननीमेव मुनयः ॥ १७
प्रलीने शब्दौघे तदनु विरते बिन्दुविभवे
ततस्तत्त्वे चाष्टध्वनिभिरनपायिन्यधिगते ।
श्रिते शाक्ते पर्वण्यनुकलितचिन्मात्रगहनां
स्वसंवित्तिं योगी रसयति शिवाख्यां भगवतीम् ॥ १८
परानन्दाकारां निरवधिशिवैश्वर्यवपुषं
निराकारां ज्ञानप्रकृतिमपरिच्छिन्नकरुणाम् ।

सवित्रीं लोकानां निरतिशयधामास्पदपदां
भवो वा मोक्षो वा भवतु भवतीमेव भजताम् ॥ १९
जगत्काये कृत्वा तदपि हृदये तच्च पुरुषे
पुमांसं बिन्दुस्थं तदपि वियदाख्ये च गहने ।
तदेतद्ज्ञानाख्ये तदपि परमानन्दगहने
महाव्योमाकारे त्वदनुभवशीलो विजयते ॥ २०
विधे वेद्ये विद्ये विविधसमये वेदगुलिके
विचित्रे विश्वाद्ये विनयसुलभे वेदजननि ।
शिवज्ञे शूलस्थे शिवपदवदान्ये शिवनिधे
शिवे मातर्मह्यं त्वयि वितर भक्तिं निरुपमाम् ॥ २१
विधेर्मुण्डं हृत्वा यदकुरुत पात्रं करतले
हरिं शूलप्रोतं यदगमयदंसाभरणताम् ।
अलंचक्रे कण्ठं यदपि गरलेनाम्ब गिरिशः
शिवस्थायाश्शक्तेस्तदिदमखिलं ते विलसितम् ॥ २२
विरिञ्चयाख्या मातस्सृजसि हरिसंज्ञा त्वमवसि
त्रिलोकीं रुद्राख्या हरसि विदधासीश्वरदशाम् ।
भवन्ती नादाख्या विहरसि च पाशौघदलनी
त्वमेवैकाऽनेका भवसि कृतिभेदैर्गिरिसुते ॥ २३
मुनीनां चेतोभिः प्रमृदितकषायैरपि मनाक्
अशक्यं संस्प्रष्टुं चकितचकितैरम्ब सततम् ।
श्रुतीनां मूर्धानः प्रकृतिकठिनाः कोमलतरे
कथं ते बिन्दन्ते पदकिसलये पार्वति पदम् ॥ २४
तटिद्वल्लीं नित्याममृतसरितं पाररहितां
मलोत्तीर्णां ज्योत्स्नां प्रकृतिमगुणग्रन्थिगहनाम् ।

गिरां दूरां विद्यामविनतकुचां विश्वजननीं
अपर्यन्तां लक्ष्मीमभिदधति सन्तो भगवतीम् ॥ २५
शरीरं क्षित्यम्भःप्रभृतिरचितं केवलमचित्
सुखं दुःखं चायं कलयति पुमांश्चेतन इति ।
स्फुटं जानानोपि प्रभवति न देही रहयितुं
शरीराहङ्कारं तव समयबाह्यो गिरिसुते ॥ २६
पिता माता भ्राता सुहृदनुचरस्सद्म गृहिणी
वपुः क्षेत्रं मित्रं धनमपि यदा मां विजहति ।
तदा मे भिन्दाना सपदि भयमोहान्धतमसं
महाज्योत्स्ने मातर्भव करुणया सन्निधिकरी ॥ २७
सुता दक्षस्यादौ किल सकलमातस्त्वमुदभूः
सदोषं तं हित्वा तदनु गिरिराजस्य दुहिता ।
अनाद्यन्ता शम्भोरपृथगपि शक्तिर्भगवती
विवाहाज्ञायाऽसीत्यहह चरितं वेत्ति तव कः ॥ २८
कणास्त्वद्दीप्तीनां रविशशिकृशानुप्रभृतयः
परं ब्रह्म क्षुद्रं तव नियतमानन्दकणिका ।
शिवादि क्षित्यन्तं त्रिवलयतनोस्सर्वमुदरे
तवास्ते भक्तस्य स्फुरसि हृदि चित्रं भगवति ॥ २९
पुरः पश्चादन्तर्बहिरपरिमेयं परिमितं
परं स्थूलं सूक्ष्मं सकलमकलं गुह्यमगुहम् ।
दवीयो नेदीयस्सदसदिति विश्वं भगवती
सदा पश्यन्त्याख्यां वहसि भुवनक्षोभजननीम् ॥ ३०
प्रविश्य त्वन्मार्गं सहजदयया देशिकदृशा
षडध्वध्वान्तौघच्छिदुरगणनातीतकरुणाम् ।

परामाज्ञाकारां सपदि शिवयन्तीं शिवतनुं
स्वमात्मानं धन्याश्चिरमुपलभन्ते भगवतीम् ॥ ३१
मयूखाः पूष्णीव ज्वलन इव तद्दीप्तिकणिकाः
पयोधौ कल्लोलाः प्रतिहतमहिम्नीव पृषतः ।
उदेत्योदेत्याम्ब त्वयि सह निजैस्सात्त्विकगुणैः
भजन्ते तत्त्वौघाः प्रशममनुकल्पं परवशाः ॥ ३२
विधुर्विष्णुर्ब्रह्मा प्रकृतिरणुरात्मा दिनकरः
स्वभावो जैनेन्द्रस्सुगतमुनिराकाशमलिनः ।
शिवश्शक्तिश्चेति श्रुतिविषयतां तामुपगतां
विकल्पैरेभिस्त्वामभिदधति सन्तो भगवतीम् ॥ ३३
शिवस्त्वं शक्तिस्त्वं त्वमसि समया त्वं समयिनी
त्वमात्मा त्वं दीक्षा त्वमयमणिमादिर्गुणगणः ।
अविद्या त्वं विद्या त्वमसि निखिलं त्वं किमपरं
पृथक्तत्त्वं त्वत्तो भगवति न वीक्षामह इमे ॥ ३४
त्वयासौ जानीते रचयति भवत्यैव सततं
त्वयैवेच्छत्यम्ब त्वमसि निखिला यस्य तनवः ।
जगत्साम्यं शम्भोर्वहसि परमव्योमवपुषः
तथाप्यर्धं भूत्वा विहरसि शिवस्येति किमिदम् ॥ ३५
असङ्ख्यैः प्राचीनैर्जननि जननैः कर्मविलयात्
सकृज्जन्मन्यन्ते गुरुवपुषमासाद्य गिरिशम् ।
अवाप्याज्ञां शैवीं शिवतनुमपि त्वां विदितवान्
नयेयं त्वत्पूजास्तुतिविरचनेनैव दिवसान् ॥ ३६
यत्षट्पत्रं कमलमुदितं तस्य या कर्णिकाख्या
योनिस्तस्याः प्रथितमुदरे यत्तदोङ्कारपीठम् ।

तस्याप्यन्तः कुचभरनतां कुण्डलीति प्रसिद्धां
श्यामाकारां सकलजननीं सन्ततं भावयामि ॥ ३७

भुवि पयसि कृशानौ मारुते खे शशाङ्के
सवितरि यजमानेऽप्यष्टधा शक्तिरेका ।
वहसि कुचभराभ्यां याऽवनम्रापि विश्वं
सकलजननि सा त्वं पाहि मामित्यवाच्यम् ॥ ३८

इति पञ्चस्तव्यां सकलजननीस्तवः पञ्चमः



मैसूरु प्राच्यविद्यासंशोधनसंस्थायां परिष्कृत्य देवनागराक्षरैः संमुद्रय प्रकाशिताः

# संस्कृतग्रन्थाः



| | ग्रन्थनाम | मूल्यम् रू. | आ. |
|---|---|---|---|
| * 1 | आपस्तम्बगृह्यसूत्रम्, सुदर्शनार्यप्रणीततात्पर्यदर्शनाख्यभाष्यसहितम् । ... | 1 | 12 |
| * 2 | आपस्तम्बयज्ञपरिभाषासूत्रम्, हरदत्तकपर्दिस्वामिभाष्याभ्यां सहितम् । ... | 1 | 0 |
| * 3 | माधवीयधातुवृत्तिः (अदादि-दिवादि-जुहोत्यादयः) ... | 2 | 0 |
| * 4 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा श्रीभट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, प्रथमसंपुटम् । ... | 2 | 8 |
| * 5 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा श्रीभट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, द्वितीयसंपुटम् । ... | 2 | 8 |
| * 6 | दक्षिणामूर्तिस्तोत्रम्, सुरेश्वराचार्यटीकासहितम् ... | 1 | 4 |
| * 7 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, तृतीयसंपुटम् । ... | 3 | 0 |
| * 8 | श्रीभगवद्गीता, श्रीशंकराचार्यभाष्यसहिता ... | 2 | 12 |
| * 9 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्ययुता च, चतुर्थसंपुटम् । ... | 3 | 0 |

* एतच्चिह्नाङ्किता ग्रन्थाः संप्रति विक्रयायात्र नोपलभ्यन्ते.

| | ग्रन्थनाम | | रू. | आ. |
|---|---|---|---|---|
| *10 | मण्डलब्राह्मणोपनिषम् ... | ... | 0 | 6 |
| *11 | सौन्दर्यलहरी ... ... | ... | 1 | 0 |
| *12 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, पञ्चम संपुटम्। | ... | 3 | 0 |
| *13 | ,, ,, दशमसंपुटम् | ... | 3 | 0 |
| *14 | ,, ,, एकादशसंपुटम् | ... | 3 | 0 |
| *15 | आपस्तम्बधर्मसूत्रं हरदत्ताचार्यप्रणीतोज्वलाख्यवृत्तियुतम्। | ... | 1 | 12 |
| *16 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च. अष्टमं संपुटम्। | ... ... | 3 | 0 |
| *17 | ,, ,, नवमं संपुटम् | ... | 2 | 4 |
| *18 | ,, ,, द्वादशं संपुटम् | ... | 1 | 12 |
| *19 | श्रीशंकराचार्यप्रबन्धावली, प्रथमसंपुटम्, (श्रीविष्णुसहस्रनाम–सनत्सुजातीयभाष्यम्). | ... | 1 | 4 |
| *20 | ,, द्वितीयसंपुटम्। (अपरोक्षानुभूतिः, शतश्लोकी, हरिस्तुतिः, दशश्लोकी च). | ... | 1 | 4 |
| *21 | ,, तृतीयसंपुटम्, (उपदेशसाहस्री गद्यपद्योभयात्मिका, रामतीर्थव्याख्यायुता). | ... | 2 | 0 |
| *22 | ,, चतुर्थसंपुटम्, (आत्मबोध–विवेकचूडामणि–वाक्यवृत्ति–स्वात्मनिरूपण–योगतारावली–सर्ववेदान्तसिद्धान्तसारसंग्रहाः). | ... | 1 | 0 |
| *23 | माधवीयधातुवृत्तिः भ्वादौ प्रथमसंपुटम् | ... | 2 | 0 |
| *24 | ,, ,, द्वितीयसंपुटम् | ... | 2 | 0 |
| *25 | गोत्रप्रवरनिबन्धकदम्बम् ... | ... | 2 | 0 |
| *26 | तैत्तिरीयारण्यकम्, सस्वरचिह्नम्, भट्टभास्करीयभाष्यसहितम्, प्रथमसंपुटम् (1-4 प्रश्नाः). | ... | 1 | 12 |

एतच्चिह्नाङ्किता ग्रन्थाः संप्रति विक्रयायात्र नोपलभ्यन्ते.

| | ग्रन्थनाम | | रू. | आ. |
|---|---|---|---|---|
| *27 | तैत्तिरीयारण्यकम्, सस्वरचिह्नम्, भट्टभास्करीय-भाष्यसहितम् द्वितीयसंपुटम्, (5-6 प्रश्नौ). | ... | 1 | 0 |
| *28 | एकाग्निकाण्डः सस्वरचिह्नः, हरदत्तीयभाष्यसहितः | ... | 1 | 4 |
| *29 | तैत्तिरीयारण्यकम्, सस्वरचिह्नं, भट्टभास्करीय-भाष्यसहितं तृतीयसंपुटम् (7-8 प्रश्नौ). | ... | 1 | 0 |
| *30 | ब्रह्ममीमांसा, श्रीकण्ठभाष्यसहिता ... | ... | 2 | 0 |
| *31 | माधवीयधातुवृत्तिः, स्वादिमारभ्य समग्रा | ... | 2 | 0 |
| *32 | बोधायनगृह्यसूत्रम्, सपरिशिष्टं (प्रथममुद्रणं) | ... | 2 | 4 |
| *33 | तैत्तिरीयप्रातिशाख्यम्, (वैदिकाभरणत्रिभाष्य-रत्नाख्यव्याख्याद्वययुतम्. | ... | 4 | 0 |
| *34 | बोधायनधर्मसूत्रम्, गोविन्दस्वामिविवरणसमे-तम्. | ... | 3 | 0 |
| *35 | भाट्टदीपिका, प्रथमसंपुटम् (तृतीयाध्याये तुरीय-पादान्ता). | ... | 3 | 0 |
| *36 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम् भट्टभास्करीय-भाष्ययुतम् . | ... | 3 | 8 |
| *37 | कौटलीयमर्थशास्त्रम्, (प्रथममुद्रणम्) ... | ... | 3 | 0 |
| *38 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम्, भट्टभास्करीय भाष्यसहितम (तृतीयाष्टके 1-7 प्रश्नाः). | ... | 3 | 8 |
| *39 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रका-शिका-चन्द्रिका-प्रकाशसहितम् I सं। | ... | 3 | 0 |
| *40 | भाट्टदीपिका, द्वितीयसंपुटम्, (तृतीयाध्याये पञ्चम-पादप्रभृति सप्तमाध्यायान्तम्). | .... | 3 | 0 |
| 41 | खादिरगृह्यसूत्रम्, रुद्रस्कन्दीयवृत्तिसहितम् | .... | 1 | 0 |
| *42 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम्, भट्टभास्करीय-भाष्ययुतम् (तृतीयाष्टके 8-12 प्रश्नाः). | .... | 2 | 4 |
| 43 | स्मृतिचन्द्रिका याज्ञिकदेवणभट्टकृता, संस्कारकाण्डः | .... | 1 | 8 |
| 44 | ,, ,, आह्निककाण्डः | . | 2 | 8 |

* एतच्चिह्नाङ्किता ग्रन्था: संप्रति विक्रयायात्र नोपलभ्यन्ते.

| | ग्रन्थनाम | | रू. | आ. |
|---|---|---|---|---|
| 45 | स्मृतिचन्द्रिका याज्ञिकदेवणभट्टकृता, व्यवहारकाण्डे प्रथमसंपुटम् . | .... | 2 | 0 |
| *46 | भाट्टदीपिका, तृतीयसंपुटम् (अष्टमाध्यायप्रभृति दशमे 4 पादान्ता). | .... | 2 | 8 |
| *47 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्वप्रकाशिका-चन्द्रिका-प्रकाशयुतम्, II सं. समन्वयाधिकरणप्रभृति आकाशाधिकरणान्तम् . | ... | 3 | 0 |
| 48 | स्मृतिचन्द्रिका, याज्ञिकदेवणभट्टकृता, व्यवहारकाण्डे द्वितीयसंपुटम् . | .... | 3 | 0 |
| *49 | भाट्टदीपिका, खण्डदेवकृता, चतुर्थसंपुटम् (दशमाध्याये पञ्चमपादप्रभृति समग्रा. | .... | 3 | 0 |
| *50 | गौतमधर्मसूत्रम्, मस्करिभाष्ययुतम्. .... | .... | 3 | 8 |
| *51 | अलङ्कारमणिहारः, प्रथमसंपुटम् (समासोक्त्यलङ्कारान्तः). | .... | 3 | 0 |
| 52 | स्मृतिचन्द्रिका, याज्ञिकदेवणभट्टकृता, श्राद्धकाण्डः | .... | 3 | 4 |
| 53 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्वप्रकाशिका-चन्द्रिका-प्रकाशयुतम्, III सं. (प्राणाधिकरणप्रभृति प्रथमे द्वितीयपादान्तं). | .... | 4 | 0 |
| *54 | कौटलीयमर्थशास्त्रम् (द्वितीयमुद्रणम्). | .... | 3 | 0 |
| *55 | बोधायनगृह्यसूत्रम्, सपरिशिष्टम्. ,, | .... | 2 | 4 |
| 56 | स्मृतिचन्द्रिका, याज्ञिकदेवणभट्टकृता, आशौचकाण्डः. | .... | 1 | 8 |
| 57 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम्, भट्टभास्करीयक्वाचित्कसायणभाष्याभ्यां युतम्, द्वितीयाष्टकम् . | .... | 3 | 8 |
| 58 | अलङ्कारमणिहारः, द्वितीयसंपुटम् (परिकरालङ्कारप्रभृति मालादीपकालङ्कारान्तः). | .... | 3 | 8 |

* एतच्चिह्नाङ्किता ग्रन्थाः संप्रति विक्रयायात्र नोपलभ्यन्ते.

| | ग्रन्थनाम | रू. | आ. |
|---|---|---|---|
| 59 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशयुतम्, IV सं. (प्रथमाध्याये तृतीयपादे आदितः अपशूद्राधिकरणान्तम्. .... | 3 | 8 |
| *60 | काव्यप्रकाशः, मम्मटभट्टकृतः, माणिक्यचन्द्रकृतसङ्केताख्यटीकायुतः। .... | 3 | 8 |
| 61 | आयुर्वेदसूत्रम्, योगानन्दनाथभाष्यसहितम्. .... | 2 | 0 |
| 62 | अलंकारमणिहारः, तृतीयसंपुटम् (सारालंकारप्रभृतिहेत्वलंकारान्तः). .... | 2 | 8 |
| 63 | विद्यामाधवीयम्, विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम् I सं. (1–5) अध्यायाः). .... | 2 | 0 |
| *64 | कौटलीयमर्थशास्त्रम्, (तृतीयमुद्रणम्) .... .... | 3 | 0 |
| 65 | अर्थशास्त्रपदसूची प्रथमसंपुटम् .... .... | 2 | 8 |
| 66 | ,, द्वितीयसंपुटम् .... .... | 2 | 8 |
| 67 | विद्यामाधवीयम्, विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम् II सं. (6–10 अध्यायाः). .... | 2 | 0 |
| 68 | अर्थशास्त्रपदसूची, तृतीयसंपुटम्. .... .... | 2 | 0 |
| 69 | अभिलषितार्थचिन्तामणिः, प्रथमसंपुटम्. .... .... | 2 | 0 |
| 70 | विद्यामाधवीयम्, विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम् III सं. (11-15 अध्यायाः). ... | 1 | 8 |
| 71 | सरस्वतीविलासः, व्यवहारकाण्डः .... .... | 2 | 8 |
| 72 | अलंकारमणिहारः, चतुर्थसंपुटम् (रसवदलंकारप्रभृति समग्रः). .... | 2 | 4 |
| 73 | आपस्तम्बशुल्बसूत्रम्, कपर्दीय—करविन्दीय—सुन्दरराजीयव्याख्याभिस्सहितम्। .... | 2 | 12 |
| 74 | तर्कताण्डवम्, व्यासयतिकृतम्, न्यायदीपाख्यव्याख्यायुतम्, प्रथमपरिच्छेदः। .... | 3 | 0 |
| 75 | अद्वैतसिद्धिः, मधुसूदनसरस्वतीकृता, गुरुचन्द्रिकाटीकायुता, I सं. (प्रथमपरिच्छेदे विश्वमिथ्यात्वप्रभृत्यागमादिबाधोद्धारान्ता). .... | 3 | 12 |

| | ग्रन्थनाम | रू. | आ. |
|---|---|---|---|
| 76 | तत्वमुक्ताकलापः, वेदान्ताचार्यकृत-सर्वार्थसिद्धि तद्व्याख्यानन्ददायिनीभावप्रकाशाभ्यां युतः, प्रथमो जडद्रव्यसरः. | 4 | 0 |
| 77 | तर्कताण्डवम्, व्यासयतिकृतम्, न्यायदीपाख्य-व्याख्यायुतम्. II सं. (द्वितीयपरिच्छेदे विधिवादान्तं). | 2 | 0 |
| 78 | अद्वैतसिद्धिः, मधुसूदनसरस्वतीकृता, गुरुचन्द्रिका-टीकायुता II सं. प्रथमपरिच्छेदे असतस्साधकत्वोपपत्तिप्रभृति अविद्याप्रतिपादकश्रुत्युपपत्तिपर्यन्ता. | 3 | 4 |
| 79 | तर्कताण्डवं न्यायदीपाख्यव्याख्यायुतम् III सं. | 2 | 0 |
| 80 | अद्वैतसिद्धिः गुरुचन्द्रिकोपेता, III संपुटम्. | 2 | 4 |
| 81 | तत्वमुक्ताकलापः, वेदान्ताचार्यकृत सर्वार्थसिद्धि-तद्व्याख्यानन्ददायिनीभावप्रकाशाभ्यां युतः II सं. | 3 | 0 |
| 82 | तर्कताण्डवं, न्यायदीपाख्यव्याख्यायुतम्, IV सं. | 2 | 4 |
| 83 | वाक्यार्थरत्नं सुवर्णमुद्रिकाख्यव्याख्यासमलङ्कृतम्. | 1 | 0 |
| 84 | श्रीमदुमास्वामिविरचितं तत्त्वार्थसूत्रम्, सुखबोधाख्यवृत्तियुतम्. | 2 | 4 |
| *85 | सौन्दर्यलहरी, शङ्कराचार्यविरचिता लक्ष्मीधरव्याख्यासमलंकृता, भावनोपनिषत् भास्कररायभाष्यसहिता, देवीपञ्चस्तवी च. | 2 | 8 |
| 86 | श्रीवेदान्ताचार्यविरचितं यादवाभ्युदयम्, श्रीमदप्पय्यदीक्षितेन्द्रविरचितव्याख्यासमलङ्कृतम् सर्गाः 13–18. | 3 | 4 |
| 87 | आपस्तम्बश्रौतसूत्रम् श्रीरामाग्निचिद्वृत्तिसहितधूर्तस्वामिभाष्यभूषितम् I सं. प्रश्नाः 1-5. | 4 | 0 |
| 88 | प्रमेयरत्नालङ्कारः (अभिनवचारुकीर्ति पण्डिताचार्यविरचितः) | 2 | 12 |

| | ग्रन्थनाम | | | |
|---|---|---|---|---|
| 89 | यादवाभ्युदयं वेदान्तदेशिककृतं, अप्पयदीक्षितकृत-व्याख्यासहितं द्वितीयसंपुटम्. (19-24 सर्गाः) | .... | 5 | 0 |
| 90 | शैवपरिभाषा शिवाग्रयोगिकृता. | .... | 3 | 0 |
| 91 | सौन्दर्यलहरी शङ्कराचार्यकृता, लक्ष्मीधराचार्यकृत-व्याख्यासहिता, भास्कररायकृतभाष्यसहिता भावनोपनिषत्, कालिदासकृता पञ्चस्तवी च. तृतीयमुद्रणम्. | | | |
| | 1. मैसूरुप्राच्यकोशागारस्थलिखितसंस्कृतग्रन्थसूची सविवरणा I सं. वेदाः (संहिता, ब्राह्मणं, आरण्यकं, उपनिषत्, मन्त्रसंग्रहश्च). | ... | 3 | 12 |
| | 2. ,, द्वितीयं संपुटम्–धर्मशास्त्रम् (स्मृतिः) | | 1 | 4 |
| | 3. मैसूरु प्राच्यकोशागारस्थ मुद्रितसंस्कृतपुस्तकप्रदर्शिनी. | | 2 | 12 |
| | 4. ,, ,, कन्नडपुस्तकप्रदर्शिनी. | | 2 | 8 |



## ಮೈಸೂರು ಪ್ರಾಚ್ಯವಿದ್ಯಾಸಂಶೋಧನ ಸಂಸ್ಥೆಯಿಂದ ಪ್ರಕಟಿಸಲ್ಪಟ್ಟ

## ಕನ್ನಡ ಗ್ರಂಥಗಳು

| | | ಬೆಲೆ ರೂ. | ಆ. |
|---|---|---|---|
| *1 | ಪಂಪಮಹಾಕವಿಯ ಆದಿಪುರಾಣ .... .... | 2 | 8 |
| *2 | ರುದ್ರಭಟ್ಟನ ಜಗನ್ನಾಥವಿಜಯ (ಮೊದಲನೆಯ ಮುದ್ರಣ) | 2 | 12 |
| 3 | ಸದಾನಂದಯೋಗಿಯ ಮಹಾಭಾರತ (ಪೌಲೋಮಾಸ್ತೀಕ ಪರ್ವಗಳು) .... | 1 | 8 |
| *4 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ, ಸಂಭವಪರ್ವ .... | 2 | 0 |
| *5 | ,, ಜತುಗೃಹಾದಿಪರ್ವ .... | 1 | 12 |
| *6 | ,, ಸಭಾಪರ್ವ .... .... | 1 | 12 |
| *7 | ,, ಅರಣ್ಯಪರ್ವ .... .... | 2 | 0 |
| *8 | ,, ವಿರಾಟಪರ್ವ .... .... | 1 | 8 |
| 9 | ಲಿಂಗಣ್ಣನ ಕೆಳದಿನೃಪವಿಜಯ .... .... | 1 | 8 |
| 10 | ಸೋಮರಾಜನ ಉದ್ಭಟಕಾವ್ಯ .... .... | 2 | 0 |
| *11 | ರುದ್ರಭಟನ ಜಗನ್ನಾಥವಿಜಯ (ಎರಡನೆಯ ಮುದ್ರಣ) | 2 | 12 |
| *12 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ, ಉದ್ಯೋಗಪರ್ವ (ಮೊದಲನೆಯ ಮುದ್ರಣ) .... | 1 | 2 |
| 13 | ಸೋಮನಾಥನ ಅಕ್ರೂರಚರಿತ್ರೆ .... .... | 1 | 0 |
| 14 | ನಯಸೇನನ ಧರ್ಮಾಮೃತ ಸಂ. I .... .... | 2 | 4 |
| 15 | ಗೋವಿಂದವೈದ್ಯನ ಕಂಠೀರವನರಸರಾಜವಿಜಯ .... | 2 | 8 |
| 16 | ನಯಸೇನನ ಧರ್ಮಾಮೃತ ಸಂ. II .... .... | 1 | 4 |
| 17 | ವೀರಭದ್ರನೃಪಾಲನ ವೀರಭದ್ರವಿಜಯ .... .... | 1 | 4 |
| *18 | ಜನ್ನನ ಅನಂತನಾಥಪುರಾಣ .... .... | 2 | 0 |

* ಈ ಗುರ್ತಿರುವ ಗ್ರಂಥಗಳು ಈಗ ಬೆಲೆಗೆ ದೊರೆಯುವುದಿಲ್ಲ.

| | | | |
|---|---|---|---|
| *19 | ಸಕಲವೈದ್ಯಸಂಹಿತಾಸಾರಾರ್ಣವ ಸಂ. .... .... | 1 | 14 |
| *20 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ, ಭೀಷ್ಮಪರ್ವ .... .... (ಮೊದಲನೆಯ ಮುದ್ರಣ) | 1 | 0 |
| *21 | ,, ದ್ರೋಣಪರ್ವ (ಮೊದಲನೆಯ ಮುದ್ರಣ) .... | 1 | 12 |
| .22 | ನಾಗವರ್ಮನ ಕಾವ್ಯಾವಲೋಕನ (ದ್ವಿತೀಯ ಮುದ್ರಣ) | 1 | 8 |
| *23 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ, ಕರ್ಣಪರ್ವ .... (ಮೊದಲನೆಯ ಮುದ್ರಣ) | 2 | 4 |
| 24 | ,, ಶಲ್ಯಗದಾಪರ್ವಗಳು .... .... | 1 | 0 |
| 25 | ಮಲ್ಲಿಕಾರ್ಜುನನಸೂಕ್ತಿಸುಧಾರ್ಣವ .... | 2 | 8 |
| 26 | ಕುಮಾರವ್ಯಾಸನ ಭೀಷ್ಮಪರ್ವ (ದ್ವಿತೀಯ ಮುದ್ರಣ) .... | 1 | 4 |
| 27 | ಶಿಂಗಿರಾಜನ ಶಿಂಗಿರಾಜ ಪುರಾಣ .... | 6 | 0 |
| 28 | ಕುಮಾರವ್ಯಾಸನ ದ್ರೋಣಪರ್ವ (ದ್ವಿತೀಯ ಮುದ್ರಣ) .... | 2 | 12 |
| 29 | ಕುಮಾರವ್ಯಾಸನ ಕರ್ಣಪರ್ವ (ದ್ವಿತೀಯ ಮುದ್ರಣ) .... | 3 | 0 |
| 30 | ಚೌಂಡರಾಜನ ನಳಚಂಪು .... | 2 | 4 |

---

* ಈ ಗುರ್ತಿರುವ ಗ್ರಂಥಗಳು ಈಗ ಬೆಲೆಗೆ ದೊರೆಯುವುದಿಲ್ಲ

# LIST OF WORKS PUBLISHED BY THE ORIENTAL RESEARCH INSTITUTE MYSORE

## A.—Sanskrit Publications

| | | Price Rs. | a. |
|---|---|---|---|
| *1. | Apastamba Grihya Sutra with the commentary of Sudarasanacarya ... ... ... | 1 | 12 |
| *2. | Apastamba Paribhasha Sutra with the commentaries of Haradatta and Kapardi Swami ... | 1 | 0 |
| *3. | Madhaviya Dhatuvritti. Vol. II, Part I (Adādi-Divādi Juhotyādi) ... ... ... | 2 | 0 |
| *4. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and SvaraPatha, Vol. I | 2 | 8 |
| *5. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with the Padapatha and Svarapatha, Vol. II | | |
| *6. | Dakshinamurtistotra with the commentary of Suresvaracharya ... ... ... | 1 | 4 |
| *7. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. III ... ... ... | 3 | 0 |
| *8. | Bhagavadgita with the commentary of Sankaracarya ... ... ... | 2 | 12 |
| *9. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. IV ... ... ... | 3 | 0 |
| *10. | Mandala Brahmanopanishad with a commentary ... | 0 | 6 |
| *11. | Saundaryalahari with the commentary of Lakshmidhara, Bhavanopanishad with a commentary, and Devīpancastavī ... ... ... | 1 | 0 |
| *12. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha. Vol. V ... ... ... | 3 | 0 |
| *13. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. X ... ... ... | 3 | 0 |
| *14. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. XI ... ... ... | 3 | 0 |

*N. B.*—**Numbers marked thus * are out of stock.**

| | | Price Rs. | a, |
|---|---|---|---|
| *15. | Apastamba Dharma Sutra with the commentary called Ujjvala ... ... ... | 1 | 12 |
| *16. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with padapatha and Svarapatha, Vol. VIII ... ... ... | 3 | 0 |
| *17. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. IX ... ... ... | 2 | 4 |
| *18. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. XII ... ... ... | 1 | 12 |
| *19. | Sankaracarya's Miscellaneous Works, Vol. I commentaries on Vishnusahasranama and Sanat-sujātiya ... ... .. | 1 | 4 |
| *20. | Sankaracarya's Miscellaneous Works. Vol. II, Aparokshānubhuti, Satasloki, Haristuti and Dasasloki with a commentary ... ... | 1 | 4 |
| *21. | Sankaracarya's Miscellaneous Works, Vol. III, Upadesasāhasri with a commentary ... | 2 | 0 |
| *22. | Sankaracarya's Miscellaneous Works, Vol. IV, Atmabodha, Vivekacudāmaṇi, Vākyavritti, Svātmanirupana, Yogatārāvali, Sarva vedanta-siddhanta sarasangraha ... ... | 1 | 0 |
| *23. | Madhaviya Dhatuvritti, Vol I, Part I (Bhvadi)... | 2 | 0 |
| *24. | Madhaviya Dhatuvritti, Vol I Part II (Bhvadi)... | 2 | 0 |
| *25. | Gotra-pravara-nibandha-kadambakam ... | 2 | 0 |
| *26. | Taittiriyaranyaka with the commentary of Bhatta-Bhaskara with Svarapatha, Vol. I ... | 1 | 12 |
| *27. | Taittiriyaranyaka with the commentary of Bhatta-Bhaskara with Svarapatha, Vol. II ... | 1 | 0 |
| *28. | Ekāgnikānda with the commentary of Haradatta with Svarapatha ... ... ... | 1 | 4 |
| *29. | Taittiriyaranyaka with the commentary of Bhatta-Bhaskara with Svarapatha, Vol III ... | 1 | 0 |
| *30. | Brahmamimamsa with the commentary of Srikantha | 2 | 0 |
| *31. | Madhavia Dhatuvritti, Vol. II Part II (Svadi and Curadi) ... ... ... | 2 | 0 |
| *32. | Bodhayana Griyha Sutra with Parisishta ... | 2 | 4 |
| *33. | Taittiriya Pratisakhya with Vaidikabharana and Tribhāshyaratna ... ... ... | 4 | 0 |
| *34. | Bodhayana Dharma Sutra with a commentary ... | 3 | 0 |

*N, B.*—Numbers marked thus * are out of stock.

| | | PRICE Rs. | a. |
|---|---|---|---|
| *35. | Bhattadipika, Vol. I ... ... ... | 3 | 0 |
| *36 | Taittiriya Brahmana with the commentary of Bhatta-Bhaskara with Svarapatha. Ashtaka I ... | 3 | 8 |
| *37. | Kautilya Arthasastra (First Edition) ... | 3 | 0 |
| *38. | Taittiriya Brahmana with the commentary of Bhatta-Bhaskara with Svarapatha, Ashtaka III, Part I ... ... ... | 3 | 8 |
| *39. | Srimad-Brahmasutra Bhashya (Anandatirthiya) with Tatparya Candrika, etc., Vol. I ... | 3 | 0 |
| *40. | Bhattadipika, Vol. II ... ... ... | 3 | 0 |
| 41. | Khādira Grihya Sutra with Rudraskandiya ... | 1 | 0 |
| *42. | Taittiriya Brahmana with Bhatta-Bhaskara's commentary, Ashtaka III, Part II ... ... | 2 | 4 |
| 43. | Smriticandrika, Samskara Kanda ... ... | 1 | 8 |
| 44. | Smriticandrika, Ahnika Kanda ... ... | 2 | 8 |
| 45. | Smriticandrika, Vyavahara Kanda, Part I ... | 2 | 0 |
| *46. | Bhattadipika, Vol. III ... ... | 2 | 8 |
| *47. | Srimad-Brahmasutra Bhashya (Anandatirthiya)... with Tatparya Candrika, etc., Vol. II ... | 3 | 0 |
| 48. | Smriticandrika, Vyavahara Kanda, Part II ... | 3 | 0 |
| *49. | Bhattadipika, Vol. IV ... ... | 3 | 0 |
| *50. | Gautama Dharma Sutra with Maskariya ... | 3 | 8 |
| *51. | Alankara Manihara, Vol. I ... ... | 3 | 0 |
| 52 | Smriticandrika, Sraddha Kanda ... ... | 3 | 4 |
| *53. | Srimad-Brahmasutra Bhashya (Anandatirthiya) with Tatparya Candrika, etc., Vol. III ... | 4 | 0 |
| *54. | Kautilya Arthasastra (Second Edition) ... | 3 | 0 |
| *55. | Bodhayana Grihya Sutra with Parisishta ... | 2 | 4 |
| 56. | Smriticandrika, Asāuca Kanda ... | 1 | 8 |
| 57. | Taittiriya Brahmana with the commentary partly of Bhatta-Bhaskara and partly of Sayana, Ashtaka II ... ... ... | 3 | 8 |
| 58. | Alankara Manihara, Vol. II ... ... | 3 | 8 |
| 59. | Srimad-Brahmasutra Bhashya (Anandatirthiya) with Tatparya Candrika, etc., Vol. IV ... | 3 | 8 |
| *60. | Kavya-Prakasa with the commentary of Sanketa .. | 3 | 8 |
| 61. | Ayurveda Sutra with the commentary of Yoganandanatha ... ... ... | 2 | 0 |
| 62. | Alankāra Manihāra, Vol. III ... ... | 2 | 8 |

*N. B.*—**Numbers marked thus * are out of stock.**

| | | PRICE Rs. | a. |
|---|---|---|---|
| *63. | Vidyamadhaviya of Vidyamadhava with the commentary of Muhurtadipika by Vishnu Sarma, Vol. I ... ... ... | 2 | 0 |
| *64. | Kautilya Arthasastra (Third Edition) ... | 3 | 0 |
| 65. | Index Verborum to the published texts of Artha-Sastra of Kautilya Vol. I ... ... | 2 | 8 |
| 66. | Index Verborum to the published texts of Artha-Sastra of Kautilya, Vol. II ... ... | 2 | 8 |
| 67. | Vidyamadhaviya of Vidyamadhava with the commentary of Muhurtadipika by Vishnu Sarma, Vol. II ... ... ... | 2 | 0 |
| 68. | Index Verborum to the published texts of Artha-Sastra Vol. III ... ... ... | 2 | 0 |
| 69. | Abhilashitartha Cintamani, Vol. I ... ... | 2 | 0 |
| 70. | Vidyamadhaviya, Vol. III ... ... | 1 | 8 |
| 71. | Sarasvati vilasa (Vyavahara Kanda) ... ... | 2 | 8 |
| 72. | Alankara Manihara, Vol. IV ... ... | 2 | 4 |
| 73. | Apastamba Sulba Sutra ... ... | 2 | 12 |
| 74. | Tarkatandava with Nyayadipa, Vol. I ... ... | 3 | 0 |
| 75. | Advaitasiddhi with Gurucandrika, Vol. I ... | 3 | 12 |
| 76. | Tattvamuktakalapa with Sarvarthasiddhi, Bhava. Prakasa anu Anandadayini, Vol. I ... | 4 | 0 |
| 77. | Tarkatandava Vol. II ... ... ... | 2 | 0 |
| 78. | Advaitasiddhi with Gurucandrika. Vol. II ... | 3 | 4 |
| 79. | Tarkatandava, Vol. III ... ... ... | 2 | 0 |
| 80. | Advaitasiddhi with Guruchandrika, Vol. III ... | 2 | 4 |
| 81. | Tattvamuktakalapa w'th Sarvarthasiddhi' Bhava-Prakasa and Anandadayini, Vol. II ... | 3 | 0 |
| 82. | Tarkatandava, Vol. IV ... ... ... | 2 | 4 |
| 83. | Vakyartharatna with the Suvarnamudrika ... | 1 | 0 |
| 84. | Tattvarthasutra of Umasvami with the Sukhabodha of Bhaskaranandi ... ... ... | 2 | 4 |
| *85. | Saundaryalahari Bhavanopanishat, Devipancastavi. | 2 | 8 |
| 86. | Apastamba Srauta Sutra with the Vritti and Bhashya of Dhurtaswami, Vol. I Prasnas 1—5. | 4 | 0 |
| 87. | Yadavabhyudaya with the commentary of Appaya-dikshit. Vol. I, Sargas 13—18. | 3 | 4 |
| 88. | Prameyaratnalankara by Abhinava Carukirti Panditācharya ... ... ... | 2 | 12 |
| 89. | Yadavabhyudaya with the commentary of Appaya-dikshit. Vol. II, Sargas 19—24. ... | 5 | 0 |

*N. B.*—Numbers marked thus * are out of stock.

| | | | |
|---|---|---|---|
| 90. | Saivaparibhasha of Sivagra Yogi ... | 3 | 0 |
| 91. | Saundaryalahari, Devipanchastavi, Bhavopanishad etc. (Third Edition) ... ... | 3 | 0 |

### MISCELLANEOUS

| | | | |
|---|---|---|---|
| 1. | A Descriptive Catalogue of Sanskrit Manuscripts in the Oriental Library, Mysore, Vol. I—Vedas. | 3 | 12 |
| 2. | Do Do Vol. II—Smritis. | 1 | 4 |
| 3. | A Catalogue of printed Sanskrit Books in the Library. of the Institute. | 2 | 12 |
| 4. | A Cataloge of Printed Kannada Books. | 2 | 8 |





## B.—Kannada Publications

| | | PRICE Rs. | a. |
|---|---|---|---|
| *1. | Adipurana of Pampa ... ... ... | 2 | 8 |
| *2. | Jagannatha Vijaya (First Edition) ... ... | 2 | 8 |
| 3. | Mahabharata—Pauloma and Astika Parvas ... | 1 | 8 |
| *4. | Mahabharata by Kumara Vyasa, Sambhava Parva | 2 | 0 |
| *5. | Mahabharata by Kumara Vyasa, Jatugriha Parva | 1 | 12 |
| *6. | Mahabharata by Kumara Vyasa, Sabha Parva ... | 1 | 12 |
| *7. | Mahabharata by Kumara Vyrsa, Aranya Parva ... | 2 | 0 |
| *8. | Mahabharata by Kumara Vyasa, Virata Parva ... | 1 | 8 |
| 9. | Keladinripa Vijaya of Linganna ... ... | 1 | 8 |
| 10. | Udbhatakavya of Somaraja ... ... | 2 | 0 |
| *11. | Jagannatha Vijaya of Rudrabhatta (Second Edition) | 2 | 12 |
| *12. | Mahabharata by Kumar a Vyasa, Udyoga Parva ... | 1 | 2 |
| 13. | Akrura Caritre of Somanatha ... ... | 1 | 0 |
| 14. | Dharmamrita of Nayasena, Vol. I ... ... | 2 | 4 |
| 15. | Kantirava Narasaraja Vijaya ... ... | 2 | 8 |
| 16. | Dharmamrita of Nayasena, Vol. II ... ... | 1 | 4 |
| 17. | Virabhadravijaya ... ... ... | 1 | 4 |
| *18. | Anantanathapurana of Janna ... ... | 2 | 0 |
| *19. | Sakalavaidya Samhita Sararnava by Virarjendra | 1 | 14 |
| *20. | Mahabharata by Kumara Vyasa, Bhishma Parva (First Edition) ... | 1 | 0 |
| *21. | Mahabharata by Kumara Vyasa, Drona Parva ... | 1 | 12 |
| *22. | Kavyavalokana by Nagavarma (Second Edition) ... | 1 | 8 |
| *23. | Mahabharata Karna Parva (First Edition) ... | 2 | 4 |
| 24. | „ Salya and Gada Parvas ... | 1 | 0 |
| 25. | Sukti Sudharnava of Mallikarjuna ... | 2 | 8 |
| 26. | Mahabharta by Kumara Vyasa Bhishma Parva (Second Edition) ... | 1 | 4 |
| 27. | Singiraja Purana by Singiraja ... | 6 | 0 |
| 28. | Mahabharata by Kumara Vyasa Drona Parva (Second Edition) ... | 2 | 12 |
| 29. | Mahabharata by Kumar Vyasa Karna Parva (Second Edition) ... | 3 | 0 |
| 30. | Nala Champu by Chaunodaraja ... | 2 | 4 |
| | A. Yogaratnakara with translation in Kannada and Telugu, Part I | | |

*N. B.*—**Numbers marked thus * are out of stock.**